वशवर्त्तिनीभिः पुनःपुनरनुशीलनेनायत्ताभिर्वाग्भिः काव्यरूपाभीरमते निर्वृतिमान् भवति तथा कीर्त्तिञ्च लभते इत्यन्वयः एतेन निर्वृतिः कीर्त्तिश्चापि काव्यस्य प्रयोजनमिति पर्यवसाने प्रतिपादितम्, अत्र काकाक्षिन्यायात् मार्गेणेत्यस्य प्रथमान्तकर्तृविशेषणद्वयेनाप्यन्वयः, गुणपदञ्चालङ्कारोपलक्षकं तेषामपि काव्यशोभाजनकत्वेनोपादेयधर्मत्वात्। यद्वा व्युत्पन्नबुद्धिर्देशकालादिविषयपरिशीलनेन निपुणमतिः वाग्भिः स्वयमेवामुना मार्गेण कृतमभिसरणं यस्य तादृशः सन् कृतास्पदः सन्नित्यर्थः रमते कीर्त्तिञ्च लभते इत्यन्वयः, अत्रोपमिनोति मदिरेक्षणाभिर्धन्यः पुण्यवान् युवेवेति यथा वशवर्त्तिनीभिः प्रेमवशीकृताभिर्मदिरेक्षणाभिर्वराङ्गणाभिः विधिदर्शितेन विधिर्दैवं तेन दर्शितेन विद्युत्प्रकाशादिना प्रकाशितेन दोषो जनपरिज्ञानादिरूपः गुणस्तदभावः तयोर्मार्गेण अनेन मार्गेणाभिसरणेऽयं दोषः अनेन तु गुण इति दोषगुणौ विविच्य स्वानुकूलतया परिगृहीतेन वर्त्मनेत्यर्थः कृतमभिसरणमभिसारो यस्य तादृशो धन्यो युवा रमते वराङ्गणाप्रेमास्पदत्वकीर्त्तिञ्च लभते तथेत्यर्थः ॥१८७॥

इति श्रीप्रेमचन्द्रतर्कवागीशभट्टाचार्य्यविरचितायां मालिन्यप्रोञ्छनीसमाख्यायां काव्यादर्शटीकायां शब्दालङ्कारदोषविभागोनाम तृतीयः परिच्छेदः॥ ३ ॥

---



उद्दण्डैः खण्डपृथ्वीपतिविजितमिदं भारतं वर्षमस्मिन्
कलिकाता राजधानी धनिगुणिवणिजां वासभूर्भूविभूषा ।
अस्यामस्त्यातिकाख्या समितिरमितधीवैभवैः काल[illegible]त-
प्राच्याश्चर्य्यप्रमेयोद्धृतिपरमतिभिः सज्जनैः सञ्चि[illegible]भूत् ॥ १ ॥
आदेश एव तस्याः क्रममतिवयसोऽपि मेऽजनयत्
व्याख्यानेऽस्मिन् शक्तिं, गरयति हि लघु परिषदो [illegible]ताम् ॥ २ ॥
क्व वयं मन्दमतयः क्व च प्राचां वचोऽम्बुधिः ।
मन्ये विलोडनादस्य विषमेव समुत्थितम् ॥ ३ ॥
याचे नतः कविवरानवरापि यायाद्
युष्माकमीक्षणपथं विवृतिर्ममेयं ।
नाङ्गीकृतं स्वपयदङ्कमनङ्कजेना
संप्रार्थितेन गरलं सरलात्मना किम् ॥ ४ ॥
उत्कर्षी कश्यपर्षेर्वंशमभिजयिनोऽग्रजन्मनोऽत्र स्थितश्री
र्वंशो विद्यावतंसोऽवमधिकुलमितस्तामलं प्रादुरासीत्
एतस्मान्मध्यराढाविततगुणगणो ग्रामणीः सज्जनानां
सम्भूतो रामनारायणधरणिसुरः शाकराढानिवासी ॥ ५ ॥
तस्यात्मजेन जगदुर्गमकाव्यमार्गसातत्यसञ्चरणलब्धममादरेण ।
रोपद्विपाश्वशशभृद्दिमिते शकाब्दे श्रीप्रेमचन्द्रकविना विवृतिः
कृतेयम् ॥ ६ ॥
काठिन्यमालिन्यनिवारणेन सुदर्शमादर्शमसौ चकार ।
पुरस्कृतेऽस्मिन् प्रतिबिम्बमाप्तान् पश्यन्तु भावान् सुधियः सुखेन
॥ ७ ॥